# ॥ श्रीरेणुकासप्तकम् ॥

श्रीगणेशाय नमः ।

पुरतो विलोक्य वृषभं पार्श्वे लिङ्गं परात्परस्य विभोः ।
पृष्ठे स्कन्दगणेशौ त्वां कालीं मन्महे मातः ॥ १॥

न त्वं लक्ष्मीमातः यल्लक्ष्मीनायकस्य माताऽसि ।
जनयित्रि राक्षसारेः तस्मात्त्वां मन्महे कालीम् ॥ २॥

संहारनायिकत्वात् मारीत्वादुग्रवेषरूपत्वात् ।
मध्यमलोकनिवासात् त्वां कालीं मन्महे मातः ॥ ३॥

जमदग्निः शिवभागः भागस्त्वं देवि शैलकन्यायाः ।
एवं ज्ञात्वा यस्त्वां भजति स धन्यो महाभागः ॥ ४॥

त्वां चण्डिकां प्रचण्डामाहुस्तन्त्राणि जनिमतां मातः ।
तस्मात्त्वं शिवकान्ता न श्रीर्न प्रेयसी च विधेः ॥ ५॥

गौरी श्रीर्वा वाग्वा न विशेषो जगति भक्तलोकस्य ।
मम तु विशिष्टा गौरी साक्षादस्याः सुतो यदहम् ॥ ६॥

तिसृषु  परदेवतासु श्रेष्ठत्वं नोच्यते मयैकस्याः ।
प्रीतिर्मे गिरिजायां लक्ष्मीतो भारतीतश्च ॥ ७॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिः रेणुकासप्तकं समाप्तम् ॥